ॐ श्रीगणेशाय नमः। अथ देशव्यवस्थां देवेशि कथ्यते क्रमयत्नतः। वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे १ तावद्वङ्गाभिधो देशो यात्रायां न हि दु
ष्यति। रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं प्रिये २ वङ्गदेशो मया प्रोक्तः सर्वसिद्धिप्रदायकः। जगन्नाथात्पूर्वभागे कृष्णातीरान्तगं शिवे ३ क
लिङ्गदेशः संप्रोक्तो वाममार्गपरायणः। कलिङ्गदेशमारभ्य पञ्चाशद्योजनं शिवे ४ दक्षिणस्यां महेशानि कालिङ्गः परिकीर्तितः। सूत्र
पार्थं समारभ्य यावद्देवी जनार्दनः। ५ तुवलकेरलदेशः स्यात्तन्मध्ये सिद्धकेरलं रामेश्वरं विद्धि देवेशि सकेरलबोधकः। ६ सर्नेतसेतुमा
रभ्य यावत्स्यात्कुपः प्रिये तावत्सर्वेषु नोमास्ति केरला परिकीर्तिता। ७ शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् तावत्काश्मीरदेशः स्या
त्पञ्चाशद्योजनावधिः। ८ कालेश्वरं श्वेतगिरिं त्रिपुरां नीलपर्वतं कामरूपाभिधो देवि गणेशगिरिमूर्धनि ९ श्रीपर्वतं समारभ्य चध्येयो
जयनीप्रिये मार्जारतीर्थं देवेशि कोलापुरनिवासिनी १० तावद्देशो महाराष्ट्रः कर्णाटस्यापि गोचरः। जगन्नाथाद्दक्षभागे श्रीभ्रमरा
म्बिका ११ तावदान्ध्राभिधो देशः। सौराष्ट्रं कृष्णसादूरं कौङ्कणात्पश्चिमं तीरे समुद्रं प्रान्तगोचरः। १२ हिङ्गुलाजान्तको देशः शतयोजनमा
श्रितः। सौराष्ट्रदेशो देवेशि श्रीरामानुजराभिधः। १३ श्रीशैलं तु समारभ्य चोलेशान्मध्यमागतः। तैलङ्गदेशो देवेशि ध्यानाध्ययनतत्
परः। १४ मल्लिकाविकासमारभ्य मलयाद्यन्तगं शिवे मल्लपालाभिधो देशो मन्त्रसिद्धिप्रदायकः। १५ रामनाथं समारभ्य श्रीरङ्गान्तं वरेश्वरी कर्णा
टदेशो देवेशि साम्राज्यभोगदायकः। १६ ताम्रपर्णीं समारभ्य शैलादुत्तरतो दृशि। अवन्तिसंज्ञको देशः कालिका तत्र तिष्ठति १७ भद्रका
लीं महाकालीं समद्रुगाद्रिपश्चिमे श्रीविदर्भाभिधो देशो वैदर्भस्तत्र तिष्ठति १८ गुर्जरात्पूर्वभागे तु द्वारिकातो हि दक्षिणे मरुदेशो मा
हेशानि उष्ट्रो सिद्धिपरायणः। १९ श्रीकोङ्कणादधोभागे तापीतः पश्चिमे वरे आभीरदेशो देवेशि विन्ध्यशैले व्यवस्थितः। २० अवन्तीतः पू
र्वभागे गोदावर्यास्तथोत्तरे मालवाख्यो महादेशो धनधान्यपरायणः। २१ चोलेशगयोर्मध्ये चोलदेशः प्रकीर्तितः। लवकर्णिस्त्वतो
प्रोक्तान्तरमेद्दो वालरः। २२ कुरुक्षेत्रात्पश्चिमे तु तथा चोत्तरयोगतः। इन्द्रप्रस्थान्महेशानि दशयोजनमात्रके। २३ पाञ्चालदेशो दे
वेशि सौन्दर्यगर्वभूषितः। पाञ्चालदेशमारभ्य म्लेच्छाद्दक्षिणपूर्वतः। २४ काम्बोजदेशो देवेशि वाजिराशिपरायणः। वैदर्भदेशात्पूर्वं
इन्द्रप्रस्थाच्च दक्षिणे २५ मरुदेशात्पूर्वभागे देशो वै राठसंज्ञकः। भोजाद्दक्षिणभागे तु इन्द्रदेशाच्च पश्चिमे २६ पाण्डुदेशो महेशानि महाराष्ट्र
रत्नकारकः। गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे २७ विदेहभूः समाख्याता तैरभुक्ताभिधः प्रिये काम्बोजदेशमारभ्य महाम्लेच्छाल्लवके २८

दे॰मा॰
४
वाहीकदेशोदेवेशि अश्वमुखि परायणा: तत्र कुंडं समारभ्य रामतत्रांतिकं शिवे २९ किरातदेशोदेवेशि विंध्यशैले च तिष्ठति करतोयां समारभ्य मके शांतं सुरेश्वरी ३०
सुरासेनाभिधो देशो म्लेच्छमार्गपरायणा: तन्मध्ये चोत्तरे देवि परात:परिकीर्तित: ३१ काश्मीरं तु समारभ्य कामरूपात्पश्चिमे सोपत्तदेशो देवेशि मानसे प्राक्च दक्षिणे ३२
मानसस्योत्तरे पूर्वे चीनदेश: प्रकीर्तित: कैलासशैलमारभ्य सरयूघोषित: परे ३३ श्रीमोरंगमहेशानि महाचीनोभिधो भवेत् जलेश्वरं समारभ्य योगिन्यंतं सुरेश्वरि ३४
श्रि नेपालदेशो देवेशि लहद्दंच शृणु प्रिये गणेश्वरं समारभ्य महोदध्यंतगं शिवे ३५ शिलहट्टाभिधो देश: पर्वते तिष्ठति प्रिये वेगदेशं समारभ्य भुवनेशं महेश्वरि ३६
गौडदेश: समाख्यात: सर्वविद्याविशारद: गोकर्णीशात्पूर्वभागे आर्यावर्तात्तु चोत्तरे ३७ तैरभुक्तात्पश्चिमे तु महापुर्याश्च वै त: महाकोशलदेशश्च सूर्यवंशपरायणा: ३८
आमेश्वरं समारभ्य तत्र कुंडांतगं शिवे मगधाख्यो महादेशो यात्रायां नहि दुष्यति ३९ दत्तोत्तरं क्रमेणैव क्रमात्कीकटमागधो चरणाद्रिं समारभ्य गृध्रकूटांतगं शिवे ४०
त्वावत्कीकटदेश: स्यात्तदूर्ध्वं भागयोमत: उत्कलाख्य: श्रीकदेशश्रीकल्ल:परिकीर्तित: ४१ कामगिरिं समारभ्य द्वारिकांतं महेश्वरि श्रीकुंतलाभिधो देशो
शो हूणश्रृणु महेश्वरि ४२ कामगिरेर्दक्षभागे महदेशात्तथोत्तरे हूणदेश: समाख्यात: शूरास्तत्र वसंति च ४३ अद्रेर्रईं समारभ्य कोटीशास्य
तु मध्यग: समुद्रशान्तदेशोहि कोंकण: परिकीर्तित: ४४ ब्रह्मपुत्रात्कामरूपात्मध्यभागे तु केकय: मागधाद्दक्षभागे तु विंध्यात्पश्चि
मत: प्रिये ४५ सूरसेनाभिधो देश: सूर्यवंशप्रकाशक: हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ४६ पांचालात्पूर्वभागे तु कुरुदेश: प्रकीर्तित:
मरुदेशात्पूर्वभागे कामाद्रेर्दक्षिणे शिवे ४७ सिंहलाख्यो महादेश: सर्वदेशोत्तमोत्तम: शिलहट्टात्पूर्वभागे कामरूपात्तथोत्तरे ४८ पुलिं
ददेशो देवेशि नानानारायणोपर: गणेश्वरात्पूर्वभागे समुद्रात्तु तरे शिवे ४९ कच्छदेश: समाख्यात: सेवनं शृणु सादरं पुलिंदात्तु
त्तरभागे कच्छाच्च पश्चिमे शिवे ५० मत्स्यदेश: समाख्यात: मत्स्यवाडुल्यकारक: वैराठपांड्ययोर्मध्ये पूर्वदक्षक्रमेण च ५१ मद्र
देश: समाख्यातो माद्रीजास्तत्र तिष्ठति सूरसेनात्पूर्वभागे कंटकात्पश्चिमे वरे ५२ सौवीरदेशो देवेशि सर्वदेशोत्तमोत्तम: अवंती
त: पश्चिमे तु वेदर्भी द्दक्षिणोत्तरे ५३ लाटदेश: समाख्यातो वर्वरं शृणु पार्वति मायापुरं समारभ्य सप्तशृंगात्तथोत्तरे ५४
वर्वराख्यो महादेश: सैंधवं शृणु सादरं लंकाप्रदेशमारभ्य मक्कात: पश्चिमे स्थले ५५ सैंधवाख्यो महादेश: पूर्वे तिष्ठति प्रिये एते
षट्पंचाशद्देशा: मयाप्रोक्ताद्यमक्तित: ५७ शुभमस्तु वासुदेवेन लिखितमात्मार्थे परार्थे च संवत १८.. शाक: १७७४